


## मासिकी पत्रिका


संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ० प्र०) भारतम्

संपुटः ५ | 15 OCTOBER 1967 | क्रमांकः १०





प्लवङ्गाश्वयुजविजयदशम्यङ्कः] शकवर्षः १८८९ [मूल्यम् ४० पैसाः

# विषयसूचिका




# संस्कृतमभिवर्धताम्

संस्कृतं परिवर्धताम्
सर्वतः
संस्कृतमभिवर्धताम् ॥

देशभाषाभेददोषनिष्कासकं,
भारतीयजनैक्यपालनपरायणम् ,
सुज्ञानसंस्कृतिकशुभमार्गबोधकम् , ॥ सं ॥

भौतिकवाददुर्भरजाड्यभेषजम् ,
नैतिकमार्गशोधननित्यसंगतम् ,
लौकिकतात्त्विकोभयमार्ग सम्मतम् , ॥ सं ॥

दिव्यवाणीति नंदितनामधेयकम् ,
भव्यसिद्धान्तविख्यातस्वगौरवम् ,
सुव्यवस्थितनित्यनव्यरूपांचितम् , ॥ सं ॥

सकलभाषालोकसन्मूलरक्षकम् ,
निखिलविज्ञाननिधानभूतं परम् ,
अखिलसद्गुणशोभितं सन्ततम् , ॥ सं ॥





## भाषाविषचक्रम्

भारतदेशस्य जातीयभाषाविवादः महान्तमनर्थं जनयति। प्रतिप्रान्तं भिन्न-भाषाः, प्रान्तान्तरेऽपि ता इति न कुत्रापि प्रान्ते शुद्धा एकैकभाषा व्यवह्रियते भारते! भाषाप्रयुक्तराष्ट्रविभागचर्या न अकलुषा वर्तते। इदानीमपि तत्तत्प्रांतां-चलेषु राजधानीषु वा विभिन्नभाषाभाषिणः बहुलसंख्या जना वर्तन्ते एव। अत एव प्रतिराष्ट्रं च भिन्नभाषाभाषिणामल्पसंख्याकानां कृते विलक्षणः प्रबन्धः करणीय-एवापतति। भाषामूलत्वेन प्रदेशविभागेऽपि कष्टानि न परास्तानि। भक्षितेऽपि लशुने न शान्तो व्याधिः।

भिन्नप्रदेशेषु भिन्नभाषाप्रामुख्यादेव जातीयभाषायाः प्रश्नः प्रमुखत्वस-मुपस्थितः। सकलभारतदेशस्य एकता संपादनाय जातीयभाषा अत्यावश्यकी सम्मान्यते। तस्या अभावे नूनं अयं देशः खण्डशः लेशनश्च विच्छिन्नः प्रभ्रष्टो भवेत्। एकस्या भाषायाः सत्वे तदालम्बेन एकतां संरक्षेत्। तदर्थं प्रथमत एव का वा तत्पदयोग्येति आलोचिता गांधीप्रभृतिभिः। तत्र च संस्कृतमभ्यर्हिततर-मुपस्थितं प्रथमतः। परन्तु नायकास्तत तत्वेन न निर्णेतुमपारयन्।

तदा तेषां मनसि अखडभारतसंरक्षणप्रश्नः अतीव बाधते स्म। एकतः आंग्लप्रोत्साहिताः महम्मदीयाः भारतं भक्तुं हर्तुं च समयं निरीक्षन्ते स्म। संस्कृतस्य राष्ट्रभाषाकल्पनसंकल्पे श्रुतमात्रे एव ते विघटेरन्। तेन च भारतं विभाजितं भवेदिति हिंदूनायका अमन्यन्त। ततः तेषां महम्मदीयानां तृप्त्यर्थं हिन्दीमेव ते राष्ट्रभाषां भाविनीमघोषयन्। तथापि महम्मदीयाः व्यकुर्वन्नेव। हिन्द्यां संस्कृतपदानां भूयिष्ठता भवेत्; तथा च हिन्दूसंस्कृतिसंवर्धनायैव सा उपयुज्येत, अतः उर्दूभाषैव राष्ट्रभाषा भवेदिति, अन्यथा पाकिस्थानं पृथक् भूयादिति च। तद्वादभीताः हैन्दवनायकाः स्वभाषासिद्धांतं तदनुगुणमशोधयन् - हिन्दुस्तानी राष्ट्र-भाषेति, न हिन्दीति। हिन्दूस्तान्यां च न संस्कृतपदस्य प्रवेशो भवेत्, अपितु

पारसी-अरब्बीपदानामेव प्रामुख्यं भवेदिति। तत्सिद्धान्तानुगुणं द. भा. हिं. प्र. सभायाः पाठ्यपुस्तकान्यपि परिवर्तितानि। तदनुगुणकार्यकलापाश्च यथाशीघ्र प्रवर्तिताः। केवलं सभानाम्नः परिवर्तनं तु नासीत्। एतत्परिवर्तनानुगुणतया अनेका उपष्टंभकयुक्तयः प्रचारिताः। अन्ततः उर्दूहिन्दूस्तानी चेकैवेति च प्रबोध्य महम्मदीयानुनयाय महान् श्रमोङ्गीकृतः। परन्तु ते पाकिस्थानमाहरन्नेव बलात्। पश्चात् हैन्दवानां मनसि कश्चन विज्ञानोदयस्समजनि - "इतोभ्रष्टस्ततोभ्रष्ट" इति रीतिरसीदस्माकमिति। तदा ते पुनर्विचार्य हिन्दूस्तानीत्वरूपमपसार्य जातीय-भाषायाः हिन्दीत्वमापादितवन्तः। परन्तु दाक्षिणात्या विशेषेण मद्रासीयाः हिन्दी-भाषाविषये स्वविरोधं प्राकटयन्, तेषां च मनसि एवं वर्तते – हिन्दी च औत्तराहाणां भाषा। ते च राजकीयोद्योगादिषु पुरस्सरेयुः, वयं च पश्चाद्भवेमेति ते बिभ्यति। अतः ते आंग्लीमेव यथावस्थितां पालयितुमुत्सहन्ते। आंग्ल्यां परदेशीयत्वदोषे विद्यमानेपि प्रपञ्चोपयोगित्व, विज्ञानादिनिधानत्व, पूर्वानुवृत्तत्वादि-गुणविशेषैः तस्या एव अनुवर्तनं कामयन्ते दाक्षिणात्याः।

यद्यपि हिन्दीप्रचारे कोटिशः द्रव्यं व्ययितं प्रचारश्च अविच्छिन्नः निरवाह्यत, तथापि सा राज्यनिर्वाहानुगुणा भाषा न संपन्ना। न तत्र तादृशाः ग्रन्था आविर्भूताः, न च तत्र निपुणाः बोधकास्समवातरन्, न तदनुगुणं पदजालं आविर्भूतम्। एतन्मध्ये एव महान्तश्च कल्लोलास्समभवन्। नेहरूसान्त्वनवाक्यैस्ते शान्ताः नूतनभाषाप्रवेशने तत्तद्राष्ट्राभीष्टानुगुणमेव कालविलम्बोङ्गीकृतः।

अधुना च त्रिगुणसेनमहाशयो विद्यामन्त्री तत्तत्प्रदेशेषु देशभाषाबोधनविधानं नियतं कर्तुं सधानभाषात्वेन च आंग्लहिंद्योः अनुसरणाय च निरचैषीत। तथा च कृते प्रतिप्रदेशं विभेदाः अतिरिच्येरन् इति भीतिः सर्वतः प्रसृता। तत्तद्भाषासु शास्त्रीयग्रन्थानां निर्माणं तद्बोधनपाटवसम्पादनं च पंचवर्षान्तरे असाध्यमिति च बहवः मन्यन्ते। अपि च तत्तत्प्रदेशीयस्य तत्रतत्रैव औद्योगिकसंबन्धः, अन्यत्र प्रादुर्भूतस्यविज्ञानविशेषस्य अपरत्र च अननुभवः इत्येवमादयो बहवः दोषा भवेयुरिति बिभ्यति बहुला जनाः। अन्ततः चाग्लामहोदयः एतद्विषये स्वपदवीत्यागमपि अकरोत। अद्य तु तत्तद्विश्वविद्यालयाधिपतीनां इच्छानुगुणं देशभषाबोधनं प्रवर्तयितव्यमिति निर्णीतमिति केचित् तुष्यन्ति जनाः।

देशौन्नत्यसाधने देशसंस्कृतिपरिरक्षणे च कतिपयानां त्यागानामावश्यकता उपस्थीयते। स्वातन्त्र्यसंपादने यथा बहूनां धनप्राणमानानां विनाशस्समजनि तथैव भाषास्वातन्त्र्यसंपादने च अनेके क्लेशाः अनिवार्या एव। तथापि फलविशेष गौरवात् ते सोढव्या एव देशीयैः। पाठ्यग्रन्थानां संसिद्धता च एकस्मिन्नेव वत्सरे निर्व्यूढा भवेत सर्वकारस्य संकल्पे दृढे पर्यवसिते। तत्तत्प्रांतीयाकाडमीनां आज्ञापने तद्धनसम्पत्तीनां शास्त्रीयग्रन्थरचनाविनियोजने च सुलभमेव अभीष्टं सेत्स्यति। अद्यतना एव उपाध्याया उपन्यासकाः प्राध्यायाश्च स्वविवेकेनैव आंग्लनिबद्धं शास्त्रीयं विषयं परिवर्त्य बोधयितुं क्लिश्येरन्। असाध्येषु च स्थलेषु आंग्लेनैव बोधने न काचिद्धानिः। पञ्चवर्षपर्यन्त च क्लेशानुभवे क्षुण्णे मार्गे समेषां अकंटक गतिः तत्र सेत्स्यति।

विद्वद्भिः किंचिदालोचनीयम् – युद्धकाले शत्रुनिरासाय आत्मरक्षणाय च यात्रायां न शिलाः न नद्यः न दुर्गाः न कण्टकाः आलोच्यन्ते यैधैः, गम्यस्थान-मेवालोच्यते। वृक्षगुल्मादयश्चोन्मूल्यन्ते, शिलाश्च पार्श्वतः अपसार्यन्ते, दारुखण्डा एव तरणयः परिकल्प्यन्ते, वाहनगमनप्रतिबन्धे च पादैरेव गम्यते, जानुभिः परिवर्तनैर्वा, यथाकथमपि विजयसम्पादनमेव वीरस्य लक्ष्यं भवति। अस्त्राणां विनाशे शिलादीनां तत्वमापाद्यते, आहारभावे च उपोष्यते। एवं स्वविजयाय स्वगौरवरक्षणाय च यावच्छक्यं प्रयत्यते। तथैव स्वभाषागौरवाय स्वसंस्कृतिसंरक्षणाय च प्रांतीयभाषा-पोषणाय च परभाषादूरीकरणाय च क्लेशानविगणय्य प्रयतितव्यं एकैकेन भारतीयेन।

सन्धानभाषाविषये हिन्दीस्थाने संस्कृतस्य निर्णये समेषां भारतीयानां आनुकूल्यं भवेत। परन्तु नायका हिन्दीमेव पुरस्सरयन्ति इति दाक्षिणात्या बहवः न सहमता भवन्ति तत्र।

संस्कृतं तु न कस्यापि प्रान्तस्य भाषा। अतः न कस्याप्यन्यत्रासुयायाः कारणमेव भविष्यति। पंचस्वेव वर्षेषु अथवा दशसु संस्कृतं सकलभारतसन्धान-समर्थं भविष्यति नूनम्। पंचमकक्ष्याप्रभृति प्रान्तीयभाषया सह संस्कृतस्य अनिवा-र्यत्वनिर्णये देशभाषायाः पाटवं संस्कृतस्य च प्रचारप्रसारौ झटिति भविष्यतः। संस्कृतेव्यावहारिक पारिभाषिकपदानां कल्पनं ज़ल्पनं च अनल्पेनैव कालेन विष्यति। असाध्यविषयेषु तु अन्यभाषापदानां चोपयोगे न कापि हानिस्संभाव्यते।

सामान्यसंस्कृतज्ञा भारते न अल्पसंख्याका वर्तन्ते विचारणे। प्रत्ययपरिवर्तने प्रान्तीयपदानि प्रतिशं पञ्चाशत संस्कृतपदान्येव प्रत्यक्षीभवन्ति । तादृशज्ञानजनने संस्कृतप्रत्यययोजनमर्मप्रकाशने च बहवः संस्कृते व्यवहर्तुं पारयन्ति । भाषापंडिताः पुरोहिताः पौराणिकाः कथका इत्येवमादयः सुलभतरं संस्कृतं ज्ञातुं व्यवहर्तुं च प्रभविष्यति । संस्कृतौन्नत्यसम्पादनाय न तावद्धनं न तावान् कालो वा व्ययितव्यः यावद्यावांश्च व्ययिते हिन्द्यर्थम् । दौर्भाग्यमिद यत् त्रिभाषासूत्रे 'द्विभाषा सूत्रेवा संस्कृतस्य नामैव न श्रूयते । "दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीम् । न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः" इतिवत् संस्कृतविस्मरणं यस्मै कस्मैचनानर्थायैव केवलं भविष्यति ।

हिन्दी च अनक्षरा निरंगा असारस्वा अल्पसारस्वता वा पोष्यते परिपोष्यते प्रतिक्षणम् । तदर्थं कलहा अंगीक्रियन्ते कुलहानिरङ्गीक्रियते सकलध्वंसोपि सह्यते । किन्तु सा यथावदेव वर्तते । कुक्री कियद्भुक्भोजितापि कियत्पायितापि पीवरापि तस्याः पुच्छं ह्रस्वतामेव प्रदर्शयति ।

अतः सहृदयान् प्रार्थये हिन्द्युद्ग्रहं परित्यज्य आंग्लभक्तिमपि अपसार्य संस्कृतोद्धरणाय मतिः प्रसारणीया । हिन्द्यास्सहभाषात्वेन वा संस्कृतस्य निर्णये दाक्षिणात्यास्सर्वेपि हिन्दीविरोधिनः तत्स्थाने संस्कृतं आदरिष्यन्ते, उत्तरभारते च स्वयमेव जनाः तदादरिष्यन्ते । एवं च विनायासं सकलभारते संस्कृतस्य अखण्डता प्रकटीक्रियेत ।

अतः आंग्लभाषाभारस्यैव आनन्देनांगीकुर्वतामस्माकं संस्कृतपठनभारः भातितरां क्लेशयिष्यति । प्रान्तीयभाषायुक्तत्वेन संस्कृतस्य निवेशने सकलं समुचितं भविष्यति । हिन्दीद्वेषिणोपि संस्कृतैकसूत्रनिबद्धाः एकतां रक्षिष्यन्ति । अतः प्रार्थये यत्र कुत्रापि पाठ्यक्रमे संस्कृतमनिवार्यं कर्तुम् ॥

जयतु संस्कृतम्!

# संस्कृतवाङ्मये वैज्ञानिकार्थविशेषाः

श्रीपिडपर्ति० शेषाचलशास्त्री

## (भगवद्गीतायां पञ्चदशोध्यायः)

**निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्तास्सुखदुःखसंज्ञैर्गच्छन्त्यमूढा पदमव्ययं तत् ॥ ५ ॥**

वैज्ञानिकार्थः — निर्मानमोहाः = आग्रहेण अज्ञानेन च शून्याः, जित-संगदोषाः = जितः सङ्गदोषः स्पर्शरूपो दोषः यैस्ते, अध्यात्मनित्याः = नित्य-प्रयत्नशीलाः, आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि इति मेदिनी; विनिवृत्तकामाः = निवृत्ताशाः, सुखदुःखसंज्ञैः = सुखदुःखनामकैः, द्वन्द्वैः = अनुलोमप्रतिलोम-(नेगटिव, पासिटिव) रूपयुगलैः, विमुक्ताः = त्यक्ताः, अमूढाः = विज्ञाः, अव्ययं = विकाररहितं, तत् पदं = तादृशव्यवसायं, गच्छन्ति = अवगच्छन्ति ।

तात्पर्यम् — ये विज्ञानिनः दुराग्रहं मौढ्यं च हित्वा किमप्यस्पृशन्तः सदा प्रयत्नशीलाः, किमपि अनभिलषन्तः स्पर्शे दुःखपदं अन्यथा सुखपदं अनुलोमप्रति-लोमगतिं बिभ्रतः विदित्वा दुरतो भूताः ते विद्युतः मूलभूतां शक्तिं अवगच्छेयुः, नान्ये ।

राजकीयार्थः — निर्मानमोहाः =दुराग्रहरहिताः, अज्ञानरहिताः, जितः विजितः संगदोषः उत्कोचग्रहणदोषः यैस्ते तादृशाः, अध्यात्मनित्याः = सदा अधिकाररक्षणप्रयत्नाः, विनिवृत्तकामाः = अनुचिताशारहिताः, सुखदुःखसंज्ञैः = सुखदुःखरूपैः, द्वन्द्वैः = कलहैः, विमुक्ताः = त्यक्ताः, अमूढाः = पण्डिताः, अव्ययं = क्षीणतारहितं, तत् पदं = राज्यस्थानं, गच्छन्ति = प्राप्नुवन्ति ।

तात्पर्यम् — दुराग्रहं प्रमादं च दूरीकृत्य, उत्कोचग्रहणदोषमपहाय, सदा अधिकप्रयत्नशीलाः अधिकवेतनाद्याशारहिताः, सुखदुःखविषये कलहं रहस्यभाषणं च अकुर्वन्तः पण्डिताः राजकीयोद्योगपदव्यां स्थिरं स्थानं प्राप्नुवन्ति ।

# "अहो दुर्दैवदुर्विलसितम्!"

प्रवचनभूषणम् - एन्. एम्. ताताचार्यः, तञ्जापुरी.

चैतन्यं देहिनां चिन्तनाशक्तिं सततमुद्योजयन्नस्ति । निर्व्यापारः वितर्दिकानिद्रालुरपि निर्मक्षिके स्वावसथे शयनमधिशयान एव मनसि किमपि गगनप्रासादं निर्मिमाण एव निद्रासुखं निर्विशति । मनसोऽयं स्वभावः । न कोऽपि तत्रापराध्यति । गीतायां भगवानपि अस्मिन्नर्थे - न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृदिति दिव्यवचसा स्वसंवादं ददौ । एवं चिन्तयन्नरः मनसा किमीष्टे ? अनितरक्षुण्णमात्मनः श्वोवसीयं क्रियासमभिहारेण विनैव परिश्रममाप्नुमः । परन्तु तन्मनोऽभिप्रेतं कदाचित फलमासादयति । कदाचित विप्रतीपं प्रवर्तते । किं तत्र निदानं स्यात् ? सर्वं तत दैवविलसितमेवेति अवशाद्वक्तव्यमापद्यते । अधुना तमिमं सार्वजनीनमर्थं पुष्कलायितुं कामपि प्रहेलिकां दन्तकथां प्रस्तुमः ।

**वेदराजः** — अयं तु चिदम्बरक्षेत्रसमीपस्थस्य कस्यचन कुग्रामस्य अभिजनः । प्रथमे वयसि वर्तमानस्याप्यस्य "वाषिङ्टन्" नगरमधिकृत्य महती महनीयतामतिरुदपद्यत । तत्रस्थाः विहाराः, वीथ्यश्च, प्रासादाः प्रतोलिकाश्च सर्वे काञ्चनमयाः कान्तामयाश्चेति प्रायोऽस्य प्रत्ययो बभूव । चपलधीरयं तदारभ्य भूताविष्टः इव आबभौ । कथमपि अचिरात सा दिव्यनगरी नयनपथमानेतव्येति मनीषाऽस्य मेदुरा प्रादुरासीत । निवृत्तिमार्गतत्परः निर्ममो मुमुक्षुरिव, गच्छन्, तिष्ठन् , स्वपन् , भुञ्जानः अपश्यत्तन्मयं जगत । अनल्पाभिः कल्पनाभिः तामेव नगरीमधिकृत्य विविधान् आलापान प्रावर्तयत । अमेरिकानगरमार्गं अर्चिरादिमार्गसदृशं विशश्वास । अहो ! कथमिदं सुसाधमाजन्मदरिद्रस्यास्य । अयं च स्वसङ्कल्पः कदाचिन्मूकस्वप्नायितो भवेदिति भूयानायासोऽप्यस्याभवत् । यतोऽस्य पिता यथाजातः कश्चन ग्रामपुरोहितः । स तु स्वजीविकां निर्वर्तयितुं चिदम्बरक्षेत्रमधिवसन् तत्र चिदम्बरेशमन्दिरं समापतद्भ्यः यात्रिकजनेभ्यः लब्धेन पारितोषिकप्रसादेन कथं कथमपि शरीरयात्रां निर्वहन्नासीत ।

अस्य प्रातिवेशिकः कश्चित परप्रतारणकलाकुशलः वाचाटः दैवज्ञः देवराज-

पितुरत्यन्तं नर्मसचिवः आसीत । सः आयुष्मतः वेदराजस्य जन्मपत्रिकां सूक्ष्मेक्षिकया सुनिभृतं पश्यन् चक्षुरुल्मीलनेन त्रिगणितपंचाङ्गगणनापारंगतत्वं प्रख्यापयन् अन्ततः "अहो ! मदायुषि ईदृशी जन्मकुण्डली न कुत्रापि दृष्टचरा! अस्य राजयोगोऽस्ति ! नियतमयं भाविता कस्यचिद्देशस्य, आहोस्वित् कस्यापि मण्डलस्य वा शासिता इति भावि शुभंयु दैवं समादिदेश ।

वेदराजः भृशं व्यवसायपरः नितरां पठने दत्तावधानः पाठालय-विद्यालय-कलाशालासु पठितॄणामग्रेसरो बभूव । अस्य सर्वतोमुखं पाटवमभिवीक्ष्य शासकप्रेष्ठाः अस्य निश्शुल्कमेव विद्यादानं व्यवस्थापयन् । पाश्चात्याचारव्यवहारे महानासीऽदस्यादरः । हैन्दवत्वद्योतकं किमपि नास्मायरोचत । कृतविद्याय, सम्पन्नवयस्कायास्मै वैवाहिकवार्तालापाः प्रक्रान्ताः । अयमपि कौशेयकोमलांगीं कोकिलकण्ठस्वनां मनःकान्तां कामपि कन्यां परिणीय तयात्मानं सर्वोन्नतं स्थापयितुममंस्त ।

वेदराजः अत्येतरेणोत्साहेन परीक्ष्यान् ग्रन्थान् उद्ग्रन्थांश्च यथावत् पपाठ । ज्ञातव्यानंशान् सुदृढं चिन्तयामास । "बि. ए. हानर्स्" परीक्षां सर्वोत्तमतया जिगाय । तस्य यशः सर्वतोमुखं प्रासरत । सः अमेरिकाविश्वविद्यालये परीक्षां दातुमैहत । कथमपि "वाषिङ्ग्टन्" नगरी गन्तव्या । परीक्षाधिकारिणः साक्षात्-कर्तव्याः आत्मानं अवगमनीयाः:, समीहितं साधयितव्यमिति भूयानभिनिवेशः तस्य प्रादुर्बभूव । स वृथा विलम्बं न सेहे । तस्य दिवसाः कल्पायिताः । उत्तरायणं आजगाम । भगवान् विवस्वानपि तस्य मनोरथं निर्वर्तयितुमिव अवाचीं विहाय उदीचीं प्रतस्थे । प्रथनाश्रमिणामयमुन्मेषकालः । कोलाहलः समुदजृम्भत । सति व्यतिकरे तादृक्षे —

सुन्दरशास्त्री — अयं "तन्त्रीवार्ता" (Telephone) आस्थान्यामधिकृतः कश्चिदुपमाण्डलीकः अधिकारी । तस्य एकैव दुहिता नाम्ना वासन्ती । वयसा, वचसा, गुणेन, रूपेणचात्यन्तं यूनां स्पृहणीया । प्रवयसामपि नेत्रोत्सवः । एकश्च पुत्रः बालः चतुर्वर्षदेशीयः आसीत । गृहिणी गृहनिर्वहणदक्षा । यद्यप्यस्यायतिर्न स्फीता तथापि मितव्ययेनामितंपचः संपदमुदच्चयामास । सः वेदराजस्य दार्वत्रिकं यशः अशृणोत् । उपश्लोक्यं तं दानीयममन्यत । वासन्ती वेदराजाय सत्क्रियया दातव्येति निरचैषीत । योतके प्रति नाधिकं वक्तव्यम् । पाश्चात्यपरीक्षा-

वधिकस्य "वाषिङ्टन्" नगरादस्था स्य यावदपेक्षितं तावद्धनं श्वशुरेण दातव्य-मिति निश्चितम् । वासन्ती वेदराजयोः परिणयविधिः महता समारोहेण अनन्यादृशे-नाडम्बरेण सम्पन्नः । वेदराजोऽपि अविलम्बितं प्रचण्डयानेन "वाषिङ्टन्" नगरं प्रतस्थे । तत्र गतोऽसौ आचारेण, आकृत्या, वेषेण, गत्या, भाषणेन च सर्वप्रकारेण तत्रत्यां जनतां लघुतरमतिशिश्ये । यो यः पश्यति, भाषते, स सर्वोऽपि कमपि सुन्दरं अमेरिकाजात्यां लब्धजन्मानमेव तममन्यत ।

वेदराजोऽपि असकृदात्मानमधिकृत्य दूयते स्म - "अहो ! अपण्डितता विधेः जनुषाहममेरिकीयः यदहं नाभवम्" इति । तथापि भारतभूमौ लब्धजनुषो वासन्त्या रूपं लावण्यं च तस्य चक्षुषोर्मनसश्च पुरस्तान्नैव पुस्फोर । हा ! तस्याः सम्बन्धः एक एव हेतुरात्मनो हैन्दवत्वप्रकाशकस्सन् तस्य मनश्शल्यो बभूव । आत्मनो भारतीयनामापि तस्मै न तरामरोचत । यत इदं पावनं नाम तस्य परुषा-क्षरघटितमसुखोच्चारणं बभौ । सद्य एव तत् तथा अन्यथयति स्म यथा श्रवणमात्रेण तत् किञ्चिदांगलं नाम भायात । ननु कीदृश तत् ? विन्सन्ट - रोजन् (Vincent Rojan) इति । इयमेका भीतिर्नैव तं जातु जहौ यत् यत्किंचिच्चिह्नमात्मनो हैन्दवत्वद्योतकं गूढं संलक्ष्येत वेति ।

एको हायनोऽवसितः । कथानायकस्य भाग्यदेवता प्रसादोन्मुखी स्वयंग्राह-कण्ठाश्लेषं आश्लिष्यत् । अधुनाऽयं साक्षात् उपाधिकरणिकपदव्यां नियुक्तः । सः प्रतिप्रयाणाय मतिं व्यधात् । नावमारुरोह । कथमप्येकस्मिन् वत्सरे द्वित्राणि पंचषाणि वा दिनानि श्वशुरगृहे वस्तव्यानि, न तु ततोऽधिकानीति मनसि प्रतिज्ञां व्यतानीत सः । अन्यथा स्वस्य लाघवमिति कृतमना बभूव ।

श्वशुरदेवः आत्मनः जामातरमधिकृत्य सचिन्तः स्थितः । अहो ! काचन "शीघ्रतन्त्रीवार्ता" ! को विशेषः ? जामाता "जाम् जामिति" वाषिङ्टन्नगरा-न्निवर्तमानोऽस्तीति । कथमिह कथयामो वासन्त्यास्तदानींतनं सोल्लासान्तःकरणस्या-तिरेकम् ! दवीयसो द्वीपान्तरादावर्तमानं प्रत्युद्यातुं सभाजयितुं च श्वशुरः शास्त्री चातको मेघमिव महता प्रमोदेन प्रतीक्षाञ्चक्रे ।

जामाता नाम कन्याजनानां उच्छ्वसितं ननु! स तु महान् किल अतिथि-विशेषः। अद्य चतुर्थवादनसमये तदीयागमनं प्रत्यैक्षिष्ट। भूम्याकाशयोरन्तरालमन्तर्दधे। अनन्यादृशः संभ्रमः। नवनागरिकसार्वभौमः अयं जामाता श्वशुरगृह-जनालक्षितमतर्कितं चागत्य स्वीयान् विस्मापयितुमभिललाष। जलयात्रां परिसमाप्य स्थलप्रयाणमनुभूय श्वशुरग्रामाभ्यर्णमायात। श्वशुरवेश्मनो नातिदूर एव धूमशकटा-दवारुरोह। केनचित् प्रवहणेन प्रतीक्षितकालात् पूर्वमेव श्वशुरावसथं प्राप। प्रवहणशब्दो द्वारि शुश्रुवे। बालकः श्यालः सहसा बहिरागत्य गृहात् अश्वप्लुते-नाधावत्। कमपि विलक्षणवेषभूषितं आप्रपदीनकाकारप्रावारकेणावृतगात्रं, शिरोभ्रिममाणपिटकायमानशिरस्त्राणविशेषं अनर्गलं निर्गलद्धूमधागविशेषं सोल्लासं नासिकाग्रन्ध्राभ्यां निस्सारयन्तं गर्वसवलितनेत्रयुगलेन प्रवहणादवतरन्तं भगिनीपति-मपश्यत्। अहो! किमिहाश्चर्यम्। वासन्ति! अरी अक्का! आवुत्तः समागतः! आवुत्तः समायातः! इत्युच्चैराघोषयन् उत्पतन् निपतन्नन्तर्गृहं प्राविशत्। श्वश्रूः सलज्ज गृहद्वारि कयाचित् वृद्धपुरंध्र्या साकं मङ्गलनीराजनं ततान। जामाता सोपचारं प्रातिस्विकतया विरचिते शृङ्गारापवर्गके चाटूक्तिपूर्वकं निवेशितः। विस्रम्भालापाः प्रावर्तन्त। विश्रान्तिसुखमनुभवितुं स विविक्तं विसृष्टः। आगतं जामातरं दिदृक्षवः समाजग्मुः प्रतिजग्मुश्च जामातरं शास्त्रिवराणां भाग्योदयं मनसा भावयन्तः।

लोके यदि नाम यत्किञ्चिद्वस्तु ब्रह्मनिर्मितेषु प्रेयस्याः वापत्न्या अपि समधिकतरं स्पृहणीयं सत वेदराजस्य मानसीं वृत्तिमावर्जयितुं धृष्णोति स्म चेत् तत् दिगन्तविश्रुतं प्राचीनभारतीयनागरिकताध्वजायितं सर्वजनमनोहरं तादृशं धन्योत्तम काराबून्दीनामकभक्ष्यविशेषमन्तरेण किमन्यद्भवेत? अहो! कालस्य नैसर्गिकं कौटिल्यम्! इदमतिरमणीयं प्रियतमसर्वस्वं वस्तु सर्वत्रापि "वाषिङ्टन्" महानगरे सुदरासदमासीत्। यदाय महाभागः कन्याजानिः श्वशुरभवनं आगच्छन्नासीत् तदा मध्येपथं पथिकपेयगृहं (Hotel) तस्य नयनयुगलं दिवाचोरमचोरयत। यद्यपि सर्वं भारतानुबन्धि वस्तुजातं सर्वथा पाश्चात्यविदुषोऽस्य प्रद्वेषजनकं निहीनत्वद्योतकं, तथापि यदा तादृशं श्रीमत् स्निग्धतमं प्रेमसाम्राज्यं काराबून्दी-भक्ष्यकमस्य दृगन्तमाचकर्ष तदास्य चापलं अङ्गारं आज्याहुतिरिवात्यवर्धयत। लालाबिन्दवः जिह्वाप्रान्तात् अव्याहतं स्रवितुमारभन्त।

अहो ! दैवगतिर्विचित्रा ! जनुषा कृष्णल कुक्कुरं कः श्वेतयितुमीष्टे ? तादृशं प्रेमसर्वस्वं भक्ष्यकमक्रीत्वा क्षणमप्यवस्थातुं अस्मत्कथानायको नैव शेके । अमेरिकायां संप्रदायशिष्टाचारमिवानुनिष्ठनामग्रेसरः "विन्सन्ट - रोजन्" पथि चरन् पामरो जन इव पश्यतां पुरतो चर्वितु नैव चकमे । कदाचित्ते आत्मानं मिथ्यावेषधारिणं साधारणकक्ष्याप्रविष्टं भारतीयं मन्येरन् इति सन्दिदिहे । अतः अन्यैरलक्षितमेव तदुपभोक्तुममंस्त । तस्मात् ऐकान्त्यं प्रतीक्षमाणः भद्रं तत् पोटलीकृत्य पेटिकायां अधस्तात् अपावाहयत । अवसरोनाऽवाप्तः । मनसि सैव चिन्ता । भगवान् प्रासीदत । सर्वोऽपि भार्याजनो निवृत्तः । वातायनेन बहिः अपश्यत । सर्वं शून्यमासीत । वायुरपि मन्दं स्पन्दते स्म । प्रतीक्षितसन्दर्भविशेषः आगतः । पेटिकामुद्धाट्य पोटलिकां अमन्दानन्दतुन्दिलः हस्ताग्रेण जग्राह । आनन्दाश्रु स्वयमस्रवत । कोणीकृतं पोटलिकाग्रं किंचिदिव नखमुखेन चिच्छेद । सूक्ष्मं द्वारं उद्भवत् । ऊर्ध्वमुद्धधार । वक्त्रे प्रकटं व्यादंदे । भक्ष्यं च्यावयति स्म । पोटलिकागतं सर्वं हरजटाविलीनं गंगातोयमिव सहसा वक्त्रकन्दरे तिरोदधे । अहो ! दुर्दैवदुर्विलसितम् । हंहो प्रमादः । पदशब्दः अश्रूयत । श्वशुरजनाः इतस्ततः परिचक्रमुः । तपस्वी प्रियातिथिः किं करोतु । गृहशोधिका नालिकेरेषीका-कूर्चहस्ता अपवरकं शोधयितुं परिसरे ददृशे । तामनु गृहजनोप्यायर्यौ । इदं प्रतिभाति स्म । कारबून्दीचर्वणकार्यं गूहयितुमैच्छत । एवं निरचैषीत । जीवित-नाशेनापि आत्मीयं वक्त्रं नोद्धाटनीयमिति मतिमाबबन्ध । न केनापि किंचिदपि भाषणीयमिति च निश्चिकाय । हा ! वक्त्रगतं प्रेमसर्वस्वं लालाजलक्लिन्नं प्रतिकलं स्फायदासीत । कपोलावुच्छूनौ । उच्छ्वासनिच्छ्वासाः व्यतिदोलायिताः । कपोलौ कुण्डलितौ । गात्रं सिस्वेद । गलो रुद्धः । अक्षिणी प्रलम्बिते । अन्ततः वृश्चिक-दष्टः चोर इव स दीनां दशां प्रापत । कीशवदाशाः पर्यपश्यत । अपराह्णभक्षण-भक्ष्यवेलापि समयासीत । अद्भुतानि ऐदंपर्येण सज्जीकृतानि नवनवानि असदृशि भक्षणजातानि आदाय नारीजनाः वासन्त्या सह वेदराज परिवव्रुः । स्मेरानना लज्जावनतमुखी प्रेयसी वासन्ती च पार्श्वतः पांचालपांचालिकेव तस्थौ । जामातृ-देवस्य मुखमवनतं बभौ । स मुखं नोद्धधार ! अनायत्या जामातरि अपचारः संपन्नोवेति विमनायमनाः नारीजनाः सुनिपुणं तस्य मुखं विलोकयामासुः । किमिदं मयाहितम ! किमयमायुष्मानस्मत्प्रेमसर्वस्वं जामातृरत्नम् ? उतान्यः ? अहो ! कुत्र गतास्य चन्द्रसुन्दरवदनगता सौन्दर्यश्रीः ? या क्षणमिव पुरा चारु चिर-मुल्ललास । हंहो ! कुत्रगतं तदस्याज्ञमनोहरं वाग्विलसितम् ? हन्त ! किययं

दारुणो विपरिणामः ? एवमबलाः स करुणं परिदिदेविरे। विद्वान् वेदराजः वक्त्रन्यवृत्य किमपि वक्तुमपारयन् करायैव व्याधुन्वन् अखिलांस्तान् निष्क्रमितुं संज्ञामानसान। जामाता नाम श्वश्रूजनानां बहिश्चराः प्राणाः खलु। तं विहाय पदात् पदमपि नैव ते चलितुमैच्छन्। केवलं विलपितं व्यवर्धत। श्वशुरः द्रुतं समानीतः। श्वशुरः नितरां विषण्णः स्वपाणिना मन्दं मन्दं सुखस्पर्शं जामातुः कपोलौ परिममर्श। रोगी सः नैव तं तथाकर्तुं अनुमेने। अन्यथा बलवदुपमर्दनेन आस्यान्तर्निलीनं रहस्यवस्तूद्धियेनेति बिभाय। श्वशुरस्त्वनुयोगपरम्पराया नैवोपरराम। हन्त! सर्वं भस्माहुतिरिव वृथा जातम्। अयं जामाता जोषमवर्तिष्ट। सुचिरं विचार्य श्वशुरः "कस्यचित दुर्मुखस्य दृष्टिदोषः संपन्नः, तेनैव अविचिकित्स्यः कश्चन दुर्व्याधिःदारुणमस्मज्जामातरमुपपीडयति। स जिह्वास्तम्भे परिणतः।" इति निरचैषीत्। अन्यादृशी किल तदानींतना दुर्दशा। किं कर्तव्यम्? क्षणमपि नोदासितव्यम्। विलम्बः सापायः। सत्वरमेव कश्चनांगलभिषगानीतः। सः यथासमुदाचारं करकलितेन हृत्परीक्षणयन्त्रेण साटोपमन्तर्गत्वा रोगिणमुपससार,न करेण च स्पर्श। यन्त्रेण परीक्षितुमुदयुङ्क्त। भिषजा क्रियमाणयिममुपद्रवं स जामाता न सेहे। अतितरामुद्विग्नो बभूव। पाणिभ्यां कांश्चित्, पादाभ्यां कांश्चन, मुष्टिभिश्चापरान नियुध्य तान् कथमपि परिजहार। रोगिणस्तादृशमाकस्मिकं दुर्विनयं सर्वानपि बन्धुजनान् शोकसागरे अमज्जयत। आंग्लभिषङ्मणिः किमपि कर्तुमनीशः निश्चेष्टः तस्थौ। स्वयमेव पाणितलं निष्पीडयन्ति स्म। नखाग्रैः मस्तकमुल्लिलेख। न मयेह जन्मनि एतादृशो व्याधिः श्रुतपूर्वः, न वा दृष्टचरः इत्यस्फुटं मुणुमुणायमानः द्विचक्रिकामारुह्य क्षणादिव तस्मात् प्रदेशात्तिरोदधे।

अहो! तादात्विकं संभ्रममधिकृत्य किं वक्तव्यम्! कतिविधा भिषजः? कतिविधास्समालोचनाः? कति ज्यौतिषिकाः मान्त्रिकाश्च। कति जीर्णा नार्यः? कतिभ्यो नाम तन्त्रीवार्ता प्रेषणम्? कति दूरभाषिण्यः? अहो हतविधे! न किमपि फलायाकल्पत।

कारागबून्दी शकलाश्चिरवासेन पीनपीनाः ववत्रे सर्वपथीना भूत्वा दीनस्य रोगिणो नियतं महान्तमुपद्रवमारचयामासुः। इयमेकैव चिन्ता श्रीमतो रोगिणो हृदयकहरे प्रबलं परिलुलोठ-वितिक्तता संपद्येतवेति। सर्वा देवताः प्रार्थिताः। सर्वान् ततो अपसारयितुं बहुधा प्रययास। श्रीमत्याः श्वश्रूदेव्या इदं झटिति प्रत्यभात्।

हन्त ! अयं सर्वथा दृष्टिदोषः। कश्चन मान्त्रिकः समाह्वातव्यः इति । सहसैव कश्चन मुण्डः समाहूतः । स च मुष्टिमेयैः अभिनवैः निम्बपत्रैः विभूतिपोटलिकया कृष्णोर्णेन तन्तुना च सह रोगिणमुपाययौ । सः कूर्चीकृतनिम्बांकुराग्रैः रोगिणो मुखस्योपरि किमपि गुणगुणन् वीजयामास । कृष्णतन्तुं तस्य दक्षिणमणिबन्धमभितो सुदृढं बन्धु यदा तस्य जामातुः करं ग्रहीतुमुदयुङ्क्त, तदा स "रोजन्डः" न केवलं पूतिगन्धीनि निम्बपत्राणि परन्तु तन्मांत्रिकमलीमसदेहजस्वेदगन्धं सोढुं सुतरां न शशाक । वमनवेगः उदरनाळं पर्याकुलयत् । किमितः सहिष्णुता ? तदैव उपानद्गूढपादेन प्रसभं कंचन पादप्रहारं तस्य मान्त्रिकवरस्य उरःस्थले दृढमावासयामास । तेन सः मुण्डः उच्चैराक्रन्दन् आविद ! आविदेत्यावर्तयन् बहिरङ्गणे जीर्णकूश्माण्डपातमापातितः, मन्दमुत्थायोरस्थलं परिमृज्य पलायांचक्रे ।

जामातरमधिकृत्य बन्धुजनाः निराशा बभूवुः । नैकोऽपीषदपि जामात्रर्थं परिष्कृतानां भक्ष्याणां गन्धमपि जघ्रौ । क्षुधा कृशीयान् बालकः पितृभ्यां सर्वथा विस्मृतः । शास्त्री महोदयः सर्वमपि दिवा व्यापृत्य पश्यन्नेव निद्रां गतः । सर्वमेव निर्जीवमभवत् । उच्छ्वासनिच्छ्वासौ विना नान्यः शब्दः । घोणारवः अश्रूयत ।

अधुना रोजनस्य समीचीनः समयः । स शयनादुत्तस्थौ । शनैर्वातायनोपकण्ठमुपजगाम । कवाटं किंचिदिव विवृतं चकार । वक्त्रं गवाक्षान्तराले लगयति स्म । वक्त्रगतं किंचिदेव धूत्कर्तुं यदा उद्यतः तदा हा ! प्रमादः । कश्चन कवाटघर्षणशब्दः श्रुतः । रोगी बिडालप्लुतमुत्प्लुत्य शय्याप्रान्तं शरणं ययौ । पर्याप्ताहाराभावेन, अध्वखेदेन, निशीथशिशिरवातेन नितरां बाध्यमानः निद्रांबुधौ निर्भरं कमठायते स्म ।

बालकः पुत्रः जामात्रर्थं संभृतानां भक्ष्याणां अर्धमात्मना समापनीयमिति मनोरथप्रासादोपरि नृत्यन्नासीत् । हा केयं विडम्बना ? मातापितरौ तथैवान्येऽपि अभ्यागतैकपरायणाः आत्मानं नागणयन्निति विषसाद । कोयं शत्रुः समागतः ? अवमोयं दशमो ग्रहः । महती पीडा । यदि म्रियते कामं यथाशीघ्रं म्रियताम् । जातस्य हि ध्रुवो मृत्युः । अकाण्डे समागत्य शिरोवेदनामुत्पादयति दुर्जातः । इत्यादिकं शपन् क्षणं निदध्यौ । पितामहोऽसकृत् मां निन्दति यत् नासिकायां

रुद्धायां वक्त्रं व्यादातुमपि न जानीषे इति । स उपायेऽधुना प्रयोक्तव्यः इति मेने । भगिनीपतेः शिरोभागस्य पश्चादवतस्थे । तस्य नासिकां तर्जन्यंगुष्ठाभ्यां गृहीत्वा दृढं निष्पीडयामास । आः पश्यत ! पश्यत ! काराबून्दीखण्डाः वक्त्रान्तश्चिरावस्थानजातद्विगुणितस्फीतिमानः गुरुभूताः वर्षासु पल्लवेषु बिलमुखेभ्यः बहिः क्रमेणोत्प्लवन्तः पर्यायप्रवर्त्यमानकरालक्रन्दनाध्ययनपरायणाः मेकार्भका इव व्याददानात् तद्वक्त्रकन्दरान्निश्चक्रमुः । जामाता झटिति प्रबुद्धः उत्थितः । शय्यायामुपविष्टः । अहो निद्राणस्य मम वक्त्रात् स्वयमेव निर्गताः किलाऽमी खण्डाः । किमिदानीं कर्तव्यम् ? अतृतीयाक्षिपातं सर्वमपि सत्वरमेव गोपनीयं इति निश्चयमकरोत् । स सर्वान् तान् खण्डान् स्वकीये उत्तरीये समाहृत्य, बध्वा, पेटिकायां निधाय योक्त्रेण सम्यम्य, कुञ्चिकां स्वकीयकाचर्मस्त्रिकायां कृत्वा दिष्ट्या रक्षितोऽस्मीति निशश्वास । स्वस्थो जात इति अन्यान् बोधयितुकामः प्रबलमक्षुवत । सर्वे प्रबुद्धाः । अहो ! अन्तिमश्वासः । हा गतोऽसि जामातः ! इति सोरस्ताडं करुणं विलपितुं प्रावर्तन्त । सुन्दरशास्त्री, मोत्ताम्यत । सर्वथा नियतिर्बलीयसी । कस्तामन्यथायितुमीष्टे ? भवतु ! पश्येम ! इत्यादिकं वदन् जामातुः मुखं निपुणमुदैक्षत । हा दैवमनुकूलमिव भाति । आमोदः । पश्यत जामातुर्मुखे प्रसादम् । सजीवलक्षणं दृश्यते । न स स्फीतिमा । नापि श्वयथुः । सर्वं सुन्दरम् । वत्से ! वासन्ति ! दिष्ट्या प्रत्युज्जीवितासि ! वन्दस्व ते मङ्गलदेवताम् । कुरु देवतोपहारम् । दिष्ट्या वयमपि रक्षिता इति समादधे ।

पश्चात् जामाता वासन्त्युपनीतं चरुकांजिकं किंचित् स्वीचकार । तादृशं मृदुपानीयं विना नान्यत् कठिनं वस्तु कथं सव्रणे कण्ठे निगिरतु !

रात्रिर्गता । प्रभातवेला समायाता । सर्वं सुस्थम् । अन्येद्युः स संप्रदायोपचारमनुभूय सायं वासन्त्या सह बाष्पशकटश्रेण्यां प्रथमकक्ष्यायां आस्थितः स्वाधिकरणस्थानं प्रायासीत् ।



# श्रीसाईस्तोत्रम

रचयिता – बाळशास्त्री, राजजोषी

"संस्कृतकोविदः" दोरनहल्ली.



भवभीतिहरं देवं श्रीसाईनाथसद्गुरुम् ।
शिर्डिवासं माहात्मानं साईनाथं भजेऽनिशम् ॥

सिद्धपुरुषं महाशान्तं भक्तकैवल्यदायकम् ।
शिरडिवासं महात्मानं साईनाथं भजेऽनिशम् ॥

भवरोगहरं वैद्यं रागद्वेषविवर्जितम् ।
शिरडिवासं महात्मानं साईनाथं भजेऽनिशम् ॥

शिवशक्तिमहारूपं साईनाथं महोज्वलम् ।
शिरडिवासं महात्मानं साईनाथं भजेऽनिशम् ॥

पुट्टपर्तिक्षेत्रवासं सत्यसाईशयोगिनम् ।
शिरडिवासं महात्मानं साईनाथं भजेऽनिशम् ॥

राजजोषीत्युपाह्वेन दोरनग्रामवासिना ।
बाळशर्माभिधानेन रचितं स्तोत्रमुत्तमम् ॥



# सुलभपाठमाला ३३

## आपणः ४

अयं वस्त्रापणः । अत्र विविधानि वस्त्राणि स्यूतानि अस्यूतानि च वर्तन्ते। अत्रत्यानि वस्त्राणि च पुरुषाणां स्त्रीणां बालानां बालिकानां च कृते उपयोक्ष्यन्ति। अत्र च अंगवस्त्राणि उत्तरीयाणि चतुष्काणि करखण्डिकाश्च वर्तन्ते । चोळिका अंशुकानि बहुविधा अत्र लभ्यन्ते । द्विपट्टाः मलः गाडाः कैशेयानि कंबलानि त्वाचानि तलकरणानि तलकाटनान्येवमादीनि वस्त्राणि चित्रविचित्ररूपैः उपलभ्यन्ते । अपि च बहवः पटाः सुसूक्ष्माः पारदर्शकाः नानाविधचित्रचित्रिताः नेत्राण्यानन्दयन्ति।

अत्र पार्श्वेत एव सीवनयन्त्रं वर्तते । फलकोपरि तिर्यङ् निहितं पार्श्वस्थदामकं पादघातचलितं तन्तुमुख्या सूच्या सीव्यति द्रुतं सुन्दरं च । कञ्चुकाः अर्धोरुकाणि आप्रपदीनानि, आन्तःकंचुकाः, अर्धबाहुकाः, पूर्णबाहुकाः, इत्येवमादीनि प्राचीननवीनवेषोपयुक्तानि वास्त्रवस्तूनि उत्पाद्यन्ते । अत्र अल्पमूल्यान्यनल्पमूल्यानि च वस्त्राणि वस्तूनि च विराजन्ते ।

अत्रैकस्मिकन् पार्श्वे वस्त्रधावनशाला वर्तते । अत्र च प्रदत्तानि मलिनवस्त्राणि शोधयित्वा अग्निपेटिकया संस्कृत्य नूतनवत्पधाव्य ददति तच्छालीयः । वस्त्रशोधने आर्द्रधावनं शुष्कधावनमिति च प्रकारद्वयं वर्तते। शुष्कधावने वस्त्रस्य स्फोटो न भवतीति वदन्ति ।

टेर्लिनटेरिकाटनादिवस्त्राणां रजकहस्तप्रदानात् श्रेयः स्वयं शोधनखण्डिकाफेनतश्शोधनमिति तज्ज्ञाः वदन्ति ।

वस्त्रेण वपुषा वाचा विद्यया विनयेन च ।
वकारैः पञ्चभिर्हीनो नरो नायाति गौरवम् ।।



# सदोद्यमः किं न करोति भद्रम् ?

ले. वैद्य रामस्वरूपशास्त्री, संपादकः बालसंस्कृतम्

मुम्बई - ७७.



उद्योगशीलस्य भवन्ति कार्याण्युद्योगशीलस्य भवन्ति चार्थाः ।
उद्योगशीले समुपैति सिद्धिः उद्योगशीलो लभते प्रतिष्ठाम् ॥

उद्योगशीलस्य नरस्य लोके न दुर्लभं किंचिदसंभवं वा ।
क्रियाविधिज्ञस्य च तस्य नित्यं यशांसि कर्माणि च यान्ति वृद्धिम् ॥

तिलेषु तैलं भवतीति सर्वो जानाति तच्चापि विना प्रयत्नैः ।
लभ्यं न, तस्मान्मतिमान् सदैव विहाय मान्द्यं कुरुते स्वकार्यम् ॥

न पौरुषं यस्य नटस्य विद्यते न तस्य साफ़ल्यमुपैति पार्श्वम् ।
मनोरथास्तस्य भवन्ति मोघाः सर्वाणि कार्याणि च यान्ति नाशम् ॥

कीर्तिं प्रसूते विदधाति सौख्यं तनोति मानं वितनोति सत्यम् ।
ददाति धैर्यं विदधाति सिद्धिं सदोद्यमः किं न करोति भद्रम् ? ॥





# देवीस्तुतिः

ले. कोडकंड्ल. वेंकटगिर्याचार्यः



सा सृष्टिर्नरदेवदानव, मुखा देव्या यथा निर्मिता
या वेदैरखिलैर्निरूपितगुणव्राता महोद्यत्प्रभा ।
या नारायणशंकराब्जजनुताकारुण्यपाथोनिधिः
सा मां पातु निरन्तरायमनिशं देवी परादेवता ॥
देवीं सद्गुणरूपिणीं भगवतीं कोट्यर्कतुल्यप्रभाम्
कारुण्यामृतपूरकोमलदृशा भक्तेष्टसन्धायिनीं ।
धातुस्सर्वगुणप्रदानकुशलां दुर्गारमाद्यर्थितां
वाणीं सर्वकलाप्रदानचतुरां भक्त्या नमाम्यन्वहम् ॥

या मीमं समवाप्य सर्वगमहो देहार्थभागायिता
उम्रं या कुरुते दयामयदृशा भक्तेष्टदं शंकरं ।
स्थाणुं या प्रविलोक्य सर्वजननी सर्वज्ञमेणीदृशा
सा काळी कृपया रमासहचरी पायादिनं मां सदा ॥

दुर्गेशत्वमवाप्य धूर्जटिरसौ सर्वेश्वरोऽभूत्सदा
दुर्गायाः करुणाकटाक्षवशतः सर्वार्चितोऽभूज्जनः ।
दुर्गामन्त्रजपप्रभाववशतस्स्वामीष्टमाप्तो जनः
तां दुर्गां शरणं व्रजामि सततं सर्वार्थसिद्ध्यै मुदा ॥

यद्देवीकुचयुग्मचन्दनरजच्छन्नोरसा संयुतः
सर्वाम्नायगणैः परात्परतमो नारायणश्शस्यते ।
यद्देवीकरदत्ततण्डुलपरित्यक्तस्वपापश्शिवः
तां लक्ष्मीं प्रणमामि लोकजननीं भक्त्या श्रियै सर्वदा ॥

## सुरभारती

मुम्बापुरीस्थ सोमय्यमहाविद्यालये अक्टोबर सप्तमतारिकायां सुरभारत्याः द्वितीयसमधिवेशनं प्रावर्तत । तत्समावेशे पंडित सातवलेकरमहोदयस्य संस्कृतसेवा विशेषान् प्रति बहवो विद्वांसः अभाषन्त ।

# जागृहि !

लेखकः - श्री दोर्बल प्रभाकरशर्मा

देशरक्षणकारणप्रतिपक्षशिक्षणदीक्षित !
नोत्थितः किमु ! न स्थितः समरांगणे ? स्थिरमानस !
अस्मदीयधराऽऽक्रमार्थपरा वरास्त्रचयोद्धताः
भारतीवभटाऽऽगता रिपवोधुना लघु जागृहि !

सर्वमानवपोषणाय सदान्नदानपरायण !
किन्त्वमद्य महालसश्च निरीक्ष्यसे ! वद कारणम् ?
पश्य ! संक्षुधिताञ्जनानलसत्वमाऽऽशु जहीहि च ।
भारतीय कृषीवलोत्तम शर्मदायक जागृहि !



# गैर्वाणीपत्रिकाप्रशंसनम्



अयि पत्रिके ! मृदुलवाणि ! नाम ते
भुवि सार्थकं ध्रुवमवैमि यद्यपि ।
अथ चापि सुन्दरसुशब्दपूर्वतः
त्वयि कांक्षते मम मनः पुनः पुनः ।।
जयतु गैर्वाणी सार्थका पत्रिकेयम् !

— बाळशास्त्री, राजजोषी



# गेयम्

लेखकः — श्रीउमामहेश्वरशर्मा, मदुरै.

कल्याणी रागः - चापूतालः

पल्लवी

वेदान्तविज्ञानम् – देहान्तफलदम्
वेदान्तज्ञानम् – वादान्तफलदम्

अनुपल्लवी

शुद्धान्तःकरणम् – सिद्धान्तःकरणम्
शुद्धान्तःकरणम् – सिद्धान्तकरणम्
अहन्ताकरणम् – स्वान्तावदातकम् ॥ वेदान्त ॥

चरणम्

आत्मन्यहम्मते – ईननमिहेष्यते
आत्मस्वहमिति – मननञ्च गम्यते
आत्मैक्यबोधे – आत्मम्भरित्वं कथम् ?
कामादेर्निदानम् – स्वान्तविमर्दकम् ॥ ॥ वेदान्त ॥

# श्रीचन्द्रलाम्बा - लक्ष्मीस्तोत्रम्

## लेखकः – सगर प्रद्युम्नाचार्यः



चन्द्रलांबे जगन्मातः नारायणमुनीडिते ।
सन्ततिस्थानविख्याते वरदे शोकनाशिनि ॥

मङ्गले त्रिजगद्वन्द्ये विष्णुवक्षस्स्थलालये ।
चन्द्रलारक्षणार्थाय सेतुराजविनाशिनि ॥

सिद्धिबुद्धिप्रदे देवि भीमातीरनिवासिनि ।
रविनाड्याऽगते भद्रे महामहिमरूपिणि ।

पद्मासनस्थिते कृष्णे शंखचक्रगदाधरे ।
विराजिताऽभयकरे सर्वसम्पत्प्रदायिनि ॥

किरीटहारकेयूरनूपुरांगदभूषिते ।
बालार्कसदृशाकारे शुद्धजांबूनदप्रभे ॥

सगरान्वयप्रोत्कर्षे सदा मद्वंशसंस्तुते ।
मन्त्रमूर्ते महाशक्ते सुखदेव्यक्तरूपिणि ॥

विष्णुप्रिये रत्नगर्भे शुद्धविज्ञानदायिनि ।
आद्यन्तरहिते लक्ष्मीः सर्वाघौघविनाशिनि ॥

सन्ततं चिन्तये दुर्गे दात्रि कल्याणवर्धिनि ।
गीर्वाणसन्नुते गौरि भक्तिमुक्तिप्रदायिनि ॥

देवि देवि महाशक्ते सदा मच्चित्तवासिनि ।
क्षीराब्धिमथनोद्भूते नारायणि नमोऽस्तु ते ॥

नृसिंहाचार्यपुत्रेण प्रद्युम्नाचार्यशर्मणा ।
रचितं माधवीप्रीत्यै स्तोत्रं दिव्यं शुभाकरम् ॥



सहृदयेषु अभ्यर्थना —

संस्कृतप्रेमिणः संस्कृतिरक्षणाभिलाषिणस्सहृदयाः !

इयं च गैर्वाणी पञ्चभिर्वर्षैः मन्दं मन्दं पदमादधाना भारतदेशे सर्वत्र सभासु संस्थासु ग्रन्थालयेषु पाठशालासु विदुषां करेषु अभिमानिनां गृहेषु च विहरतीति सुविदितमेव भवतां । छन्ददातॄणां अत्यल्पत्वेपि व्ययस्य बाहुल्येपि यथाकथंचित् इयं सेवते बहून् प्रियसंस्कृतान् निरतम् । एवमेव अविरतव्यये समा अशक्ता निरुत्सुका किंकर्तव्यतामूढा च वर्तते ।

पञ्चशतसंख्याकानां वा छन्दप्रदानां लाभे चेयं स्वयं पोषिता भविष्यति । इदानीं च एकशतशून्या एव ते वर्तन्ते । पत्रिका च सहृदयमनःप्रसादनाय विना छन्दमेव प्रेष्यते सर्वेभ्यः । केचनैव द्रुतहृदयाः स्वच्छन्दं स्वच्छन्दमर्पयन्ति । अन्ये च तूष्णीमासते । केचन स्वेषां एतद्भाषाया अज्ञानं निरूप्य पत्रिकाया अनागमं वांछन्ति । एवं च सकलैः प्रकारैः एतस्याः आर्थिकसंकटस्समुपस्थितो भवति ।

अतः प्रार्थये यावच्छक्यं सर्वानपि सहकर्तुम् । विविधसंस्थानानांकुते धनिनां ामान्यानां च कृते वार्षिकं चतुरूप्यकं धनं न भारकारि भवति । तदेव बहुभि- ियमानं पत्रिकायै जीवनरक्षकं च भवति । अतः सम्यगालोच्य संस्कृताभिज्ञास्तदन- ज्ञा वा तदभिमानिनस्सर्वेपि छन्दप्रदानेन पोषयन्तु एतत्क्रियमाणां च सेवां विच्छिन्नामङ्गीकुर्वन्त्विति प्रार्थये ॥

इति विनीतः,
ति० कृ० तिरुवेङ्कटाचार्यः,
प्रधानमन्त्री.



आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A. 3/65 Date 14—7—65

R. N. 8145/60. Postal R. No. R. H. 493.

वार्षिकम् रू. ४-००

# प्रहेलिकाः



कति ते कबरीभारस्सुमनस्संगादतीव नीलत्वात् ।
भवति च कलापवत्वान्निर्जरसेव्यः कथं न स्यात् ? ॥

अर्थः – प्रिये, ते, कबरीभारः=केशवेशः, सुमनस्संगात=पुष्पसंबन्धात, देवसंबन्धाच्च, अतीव नीलत्वाच्च, कति = कः विष्णुः इव आचरति; कलापत्वात = बर्हकत्वात् चन्द्रवत्वात च, भवति = भवः शिव इव आचरति; तस्मात शिवकेशवव-द्विद्यमानत्वात, निर्जरसेव्यः = युवसेव्यः देवसेव्यश्च, कथं, न स्यात = न भवेत ?

वाहीकृतमहाधेनुगणाधिपविनायकौ ।
भवतां भवतां भूत्यै पार्वतीपरमेश्वरौ ।

अर्थः – वहीकृतौ = वाहनत्वेनांगीकृतौ, महाधेनुगणाधिपः = नन्दी, विनायकः = पक्षिराजश्च याभ्यां तौ, पार्वतीपः च = शिवश्च, रामेश्वरश्च = विष्णुश्च, भवतां = युष्माकं, भूत्यै = संपत्प्रदानार्थं, भवतां = स्याताम् ॥



Published by Sri N. Ramanatha Iyer. B. A., B. L., Advocate &
Secretary S. B. P. Sabha, Chittoor, (A. P.)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C, 1500